॥ चाक्षुषोपनिषत् नेत्रोपनिषत् च ॥

अथातश्चाक्षुषीं पठितसिद्धविद्यां चक्षूरोगहरां व्याख्यास्यामो
यया चक्षूरोगाः सर्वतो नश्यन्ति चक्षुषो दीप्तिर्भवति ।

अस्याश्चक्षुषी विद्यायाः अहिर्बुध्न्य ऋषिः । var अस्याचाक्षुषविद्याया
गायत्री छंदः । सूर्योदेवता । var सवितादेवता
चक्षूरोगनिवृत्तये विनियोगः ।

ॐ चक्षुश्चक्षुश्चक्षुश्तेजस्थिरोभव । मां पाहि पाहि ।
त्वरितम् चक्षूरोगान् शमय शमय । त्वरितं ममाजातरूपं तेजो
दर्शय दर्शय । यथाहमंधोनस्यां तथा कल्पय कल्पय ।
कल्याण कुरु कुरु । यानि यानि मम पूर्वजन्मोपार्जितानि चक्षुः प्रतिरोधक
दुष्कृतानि सर्वाणि निर्मूलय निर्मूलय ।
ॐ नमश्चक्षुस्तेजोदात्रे दिव्याय भास्कराय । var दिव्याय भास्कराय
ॐ नमः कल्याणकराय अमृताय । ॐ नमः सूर्याय । var करुणाकराय
ॐ नमो भगवते सूर्याय अक्षितेजसे नमः ।
खेचराय नमः । महते नमः । रजसे नमः । तमसे नमः ।
असतो मा सद्गमय । तमसो मा ज्योतिर्गमय ।
मृत्योर्मा अमृतं गमय । उष्णो भगवाञ्छुचिरूपः ।
हंसो भगवान् शुचिप्रतिरूपः । य इमां चाक्षुष्मतीं
विद्यां ब्राह्मणो नित्यमधीयते न तस्य अक्षिरोगो भवति ।
न तस्य कुले अंधो भवति । न तस्य कुलेऽधो भवति ।
अष्टौ ब्राह्मणान् ग्राहयित्वा विद्यासिद्धिर्भवति ।
ॐ विश्वरूपं घृणिनं जातवेदसं हिरण्मयं पुरुषं ज्योतीरूपं
तपंतं सहस्ररश्मिभिः शतधावर्तमानः पुरःप्रजानामुदयत्येष
सूर्यः । ॐ नमो भगवते आदित्याय अवाग्वादिने स्वाहा ।